# अब्धियाने निर्णयः।



श्री

महीयांस ! किञ्चित्कालादस्यां मुम्बापुर्यां द्वीपान्तरगमनसमुद्रयानादिविषयिणी प्रसरति चर्चा। अत्रास्ति पक्षत्रयम्। तत्र प्रथमत पारसीदैनिकपत्रसम्पादका यत्किञ्चिदुक्त विषये प्रतिपादयन्ति न ते श्रुतिस्मृत्यनुयायिनो नापि तद्विद। द्वितीयपक्षे धर्मशास्त्रानभिज्ञा द्विजातयस्ते न मुह्युरिति अब्धियानादौ श्रीमदाचार्यश्रीशृङ्गेरीपीठाधिपतिप्रदत्ता व्यवस्था संस्कृतचन्द्रिकात प्रत्यक्षरमिह प्रकाश्यते तामवलोक्य विदन्तु ते धर्मशास्त्राशयमिति। अवशिष्टपक्षे स्मृत्यादिपर्यालोचका विद्वांसस्तेऽपि समवलोक्यैनां प्रसीदन्त्विवत्यल पल्लवितेन।

सुविदितमेवैतच्चन्द्रिकाप्रणयिना यत्प्रातिपूर्वमेव मोहमय्यां कमपि कपोलजातीय समुद्रयायिन प्रायश्चित्तप्रदानपुर सर सव्यवहार्यतामापादयद्भि श्रीमद्द्वारकापीठाधिष्ठितै श्रीमज्जगद्गुरुपादैर्विस्पष्टाक्षरमेव विदेशगमने दोषाभाव उदघोषीति। एव हि प्रतिपादयन्ति मोहमय्यां प्रकाशमानानि संवादपत्राणि। कतिपयेभ्यश्च दिवसेभ्य पूर्वं वेङ्कटेशसमाचारनाम्नि संवादपत्रे प्रकाशिता श्रीमद्द्वारकाजगद्गुरुप्रदत्ता एतद्विषयिणी व्यवस्था निराबाधमेवैतद्विस्पष्टयति। यद्यपि सर्वथा प्रमाणमेव न श्रीजगद्गुरुपादास्तथापि न किल समुल्लङ्घितधर्ममर्यादान्यमीषामपि वचनानि श्रद्धेयतामापद्यन्ते। दुनोति चास्मदीय चेत एतद्विधैरयुक्तप्रायैर्निर्णयै श्रीमज्जगद्गुरुपीठस्य दोषारपदीकरणम्। पर्जन्यवर्षं हि वर्षन्तीदानामपशब्दान् श्रीमति द्वारकाजगद्गुरुपीठे धर्मानुयायिनो विद्वांस। न चैतच्छक्यते सोढुमस्मानि। अयुक्त एव चाय निर्णय इति तु नि सन्देहमेव ब्रूम। अत एव च साञ्जालरन्धमेव प्रत्याख्यायते सोऽयमस्माभि। यथात्र समुचित शास्त्रार्थं सोऽय प्रागेव प्रकाशित प प श्रीमच्छृङ्गेरीपीठाधिष्ठितै श्रीमज्जगद्गुरुचरणै। सोऽयमिदानीं प्रेक्षावतां नयनगोचरतामापद्यतामिति यथावस्थित एव चन्द्रिकाया प्रकाश्यते। सुनिपुण च समवेक्ष्यैन समवधार्यतां कृतप्रायश्चित्तानामपि विदेशगामिनामसव्यवहार्यत्व दुरुत्सारमेवेति।

काञ्च्यां प्रकाशमानया चास्मत्सहजीविन्या श्रीमत्या मञ्जुभाषिण्या प्रकाशितो यथासमयमत्र प्राचीन केनापि प्रामाणिकेन दाक्षिणात्यपण्डितप्रवरेण प्रदत्त शास्त्रार्थं इति सहस्रशोऽस्यै धन्यवादान् वितराम। यत्तु प्रचरित केनापि सपादकसिंहेन सोऽय संवादपत्रिकानामस्थान एव केवल कोलाहल इति प्रक्षिप्यतां तावत्तेन वेङ्कटेशसमाचारे प्रकाशिताया व्यवस्थाया समुन्मीलित चक्षुरित्येतावदेव ब्रूम।

श्रीमच्छृङ्गेरीपीठप्रदत्तस्तु निर्णय वर्त्यब्धियानमीमांसाश सन्दर्श्यतामय धीरै यथा—

श्रीरस्तु ।

श्रीलक्ष्मीनृसिंहाय नमः



# कल्यब्धियानमीमांसा ।

यो देवस्त्रिपुरान्धकादिविजयी ध्यायन्ति यं योगिनो येनाधारि कलानिधिर्विधिमुखा यस्मै नमस्कुर्वते । यस्माद्विश्वमिदं चराचरमभूद्यस्यार्धमद्रीन्द्रजा यत्राभ्याजकपातरङ्गलहरी चोभूयतेऽव्यात्स नः ॥ १ ॥

सोऽव्याद्गजास्यः किल रत्नगर्भनामा सहिष्णुर्धरणेश्चकास्ति । यस्योदरभ्राजदनेकलोकप्रदर्शनार्थं धरणीधराग्रे ॥ २ ॥

वाल्मीकिमुख्यकविराडुपगीयमानवाक्चातुरीवितरणप्रथितप्रशस्तिः । वागीशवासवमुखामरसेव्यमाना वाग्देवता भवतु वाञ्छितसिद्धये नः ॥ ३ ॥

समेधमानैरखिलैरनुक्षणं कलाकलापैरधिकं समुल्लसन् । कलङ्कशून्यो विबुधैरधर्षितोऽयमिन्दुरन्यादृश एव भूतले ॥

श्रीसच्चिदानन्दशिवाभिनवनृसिंहभारत्यभिधापदेशात् । श्रीशंकरार्यो भुवनैकमान्यो जेजीयते संप्रति शृङ्गपुर्याम् ॥

तत्सांनिध्यो यस्तदनुग्रहार्थी लक्ष्मीनृसिंहार्यविनेयवर्यः । स्मृत्युक्तराद्धान्तसमर्थयिष्णु काशीनृसिंहाभिदया चकास्ति ॥

श्रीगुर्वनुज्ञया तेन जैमिनीयनयान्वयात् । कल्यब्धियानमीमांसा क्रियते कुतुकान्मया ॥

कलियुगे द्विजानां समुद्रयानं सामान्यतो धर्मशास्त्रनिषिद्धं न वेति शास्त्रनिषिद्धत्वेऽपि पातित्यहेतुर्न वेति पातित्यहेतुत्वेऽपि तस्य प्रायश्चित्तमस्ति न वेति अस्ति चेत्तादृशप्रायश्चित्तेन परिपूतस्य समुद्रयायिसामान्यस्य संसर्गस्सामान्यतश्शास्त्रनिषिद्धो न वेति च चतुर्धा विप्रतिपत्तयस्सन्ति ।

तत्र प्रथमविप्रतिपत्तौ कलियुगे द्विजानां समुद्रयानं सामान्यतो धर्मशास्त्रनिषिद्धमिति सिद्धान्तः । तथा हि कलिवर्ज्यप्रकरणे पराशरमाधवीयस्मृतिसंग्रहयोः —द्विजस्याब्धौ तु निर्याणं शोधितस्यापि संग्रह इति । स्मृतिसंग्रहे समुद्रयानस्वीकारः कमण्डलुविधारणमिति । मदनपारिजाते समुद्रयात्रास्वीकारः कमण्डलुविधारणमित्याद्यनेकवचनैस्सामान्यतस्समुद्रयानस्यैव निषेधात् । न च हेमाद्रौ मासं कारागृहे वासो नौभिर्यात्रा दिनत्रयम् । म्लेच्छावास्तथा पक्षः यस्य स्यात्स तु पातकीति दिनत्रयान्यूनकालिकनौकायानवत एव पातकित्वप्रतिपादनम-

रीतिवचनेन दिनत्रयन्यूनकालिकनौकायानस्यादोषत्वप्रतिपादनपरेण विरोधादुत्सर्गापवादन्यायेन पूर्वोक्तवचनाना दिनत्रयान्यूनकालिकसमुद्रयाननिषेधपरत्वस्यैवाङ्गीकरणीयतया दिनत्रयन्यूनकालिकसमुद्रयानस्य निषेधाविषयत्वात् न समुद्रयानसामान्यस्य शास्त्रनिषिद्धत्वमिति वाच्यम् । ययोर्वाक्ययोर्मध्ये एकस्यासङ्कोचेनैव प्रवृत्तौ अन्यन्निर्विषयं स्यात्तयोरेवोत्सर्गापवादभावः यथा मा हिंस्यात्सर्वा भूतानीत्युत्सर्गे । अग्नीषोमीयं पशुमालभेतेत्यपवाद तत्र मा हिंस्यात्सर्वा भूतानीत्येतस्यासङ्कोचेन सर्वभूतहिंसानिषेधपरत्वे अग्नीषोमीयमित्यादेर्निर्विषयत्वमापद्येत । अतो मा हिंस्यात्सर्वा भूतानीत्यस्य सङ्कोचेन अग्नीषोमीयपश्वतिरिक्तसर्वभूतहिंसानिषेधपरत्वमङ्गीकरणीयम् । प्रकृते तु द्विजस्याब्धौ तु नियाणमित्यादिवचनानामसङ्कोचेन स्वार्थसमुद्रयानसामान्यनिषेधपरत्वेऽपि नौभिर्यानं दिनत्रयमिति वचनस्य नद्याद्यधिकरणकदिनत्रयान्यूनकालिकनौकायानकर्तुः पातित्यप्रतिपादनद्वारा दिनत्रयन्यूनकालिकनद्याद्यधिकरणकनौकायानस्य अदोषत्वप्रतिपादनपरत्वे बाधकाभावात् नौभिर्यानमित्यादेरसङ्कोचकत्वासम्भवेन द्विजस्याब्धावित्यादिवचनान्यसङ्कोचेनैव स्वार्थं बोधयन्तीति दिनत्रयन्यूनकालिकसमुद्रयानस्यापि समुद्रयानत्वाविशेषेण निषेधविषयत्वसम्भवात् समुद्रयानसामान्यमपि शास्त्रनिषिद्धमेव । न च बौधायनसूत्रे पञ्चधा विप्रतिपत्तिर्दक्षिणतस्तथोत्तरतो यानि दक्षिणतस्तानि व्याख्यास्यामो यथैतदनुपेतेन सह भोजनं स्त्रिया सह भोजनं पर्युषितभोजनम् मातुलपितृष्वसृदुहितृपरिणयनमित्यथोत्तरत ऊर्णाविक्रयः सीधुपानमुभयतो दद्भिर्व्यवहार आयुधीयकं समुद्रयानमितीतरदितरस्मिन्कुर्वन्दुष्यतीतीतरदितरस्मिंस्त्व तत्र देशप्रामाण्यादित्यनेन समुद्रयानस्यौत्तरीयद्विजधर्मत्वेनोक्तत्वादौत्तरीयद्विजकर्तृकसमुद्रयाननिषेधासम्भवेन दाक्षिणात्यद्विजकर्तृकसमुद्रयानमात्रनिषेधस्यैव द्विजस्याब्धावित्यादिवचनतात्पर्यविषयत्वाङ्गीकारावश्यकतया न समुद्रयानसामान्यस्य शास्त्रनिषिद्धत्वमिति वाच्यम् । उक्तबोधायनसूत्रे समुद्रयानस्यौत्तरीयद्विजधर्मत्वेन प्रतिपादनं कलियुगेतरयुगाभिप्रायेणेति वक्तव्यम् । न च सहपठितानामूर्णाविक्रयसीधुपानादीनां कलिधर्मत्वेन समुद्रयानस्यापि कलिधर्मत्वमेव वक्तुं शक्यम् आयुधीयकस्य कलिनिषिद्धस्यापि सह पाठात् । आयुधीयकं शस्त्रधारणं तत् ब्राह्मणानां कलियुगे निषिद्धम् । तथा च वैद्यनाथीये-ब्राह्मणानामापद्वृत्तिकथनावसरे असम्भवे त्वापदि क्षत्रियादिवृत्तिर्हिंसाप्रायत्वा वर्जनीया आततायिद्विजाग्र्याणां धर्मयुद्धेन हिंसनम् । आपद्वृत्तिर्द्विजाग्र्याणामध्वस्तनिस्ता तथेति कलौ निषिद्धत्वात् । क्षत्रवृत्त्या वैश्यवृत्तिः प्रशस्ता स्यात्कलौ युग इत्याश्वलायनस्मरणाच्चेत्यादिना शस्त्रधारणरूपायुधीयकस्य हिंसाप्रायक्षत्रियवृत्तिस्वरूपतया तस्य कलिनिषिद्धत्वं कलिवर्ज्यप्रकरणपठितेन आततायात्यादिवचनेन आश्वलायनस्मृत्या च समर्थितम् अत कलिनिषिद्धेनायुधीयकेन सह पाठात् समुद्रयानस्यापि कलिनिषिद्धत्वमेव । न च विनिगमनाविरह इति वाच्यम् । उक्तबोधायनमूलस्य कलियुगेतरयुगासाधारणायुधीयकादिधर्मप्रतिपादकतया कलियुगधर्ममात्रप्रतिपादकत्वाभावेन कल्यादिपदसमभिव्याहृतत्वाभावेन च तदपेक्षया उक्त-

श्रीरस्तु ।

श्रीलक्ष्मीनृसिंहाय नमः



# कल्यब्धियानमीमांसा ।

यो देवास्त्रिपुरान्धकादिविजयी ध्यायन्ति य योगिनो येनाधारि कलानिधिर्विधिमुखा यस्मै नमस्कुर्वते । यस्माद्विश्वमिदं चराचरमभूद्यस्यार्धमद्रान्द्रजा यत्राव्याजकृपातरङ्गलहरी चोभूयतेऽव्यात्स नः ॥ १ ॥

सोऽव्याद्गजास्यः स्फूर्जद्रत्नगर्भनामा सहिष्णुर्धरणेधकास्ति । यस्योदरभ्राजदनेकरत्नप्रदर्शनार्थं धरणीधराग्रे ॥ २ ॥

वाल्मीकिमुख्यकविराड्डुपगीयमानवाक्चातुरीवितरणप्रथितप्रशस्तिः । वागीशवासवमुखामरसेव्यमाना वाग्देवता भवतु वाञ्छितसिद्धये नः ॥ ३ ॥

समेधमानैरखिलैरनुक्षणं कलाकलापैरधिकं समुल्लसन् । कलङ्कशून्यो विबुधैरधर्षितोऽयमिन्दुरन्यादृश एव भूतले ॥

श्रीसच्चिदानन्दशिवाभिनवनृसिंहभारत्यभिधापदेशात् । श्रीशङ्करार्यो भुवनैकमान्यो जेजीयते सम्प्रति शृङ्गपुर्याम् ॥

तत्साग्रधी यस्तदनुग्रहार्थी लक्ष्मीनृसिंहार्यविनेयवर्यः । स्मृत्युक्तराद्धान्तसमर्थयिष्णु काशीनृसिंहाभिदया चकास्ति ॥

श्रीगुर्वनुज्ञया तेन जैमिनीयनयान्वयात् । कल्यब्धियानमीमांसा क्रियते कुतुकान्मया ॥

कलियुगे द्विजानां समुद्रयानं सामान्यतो धर्मशास्त्रनिषिद्धं न वेति शास्त्रनिषिद्धत्वेऽपि पातित्यहेतुर्न वेति पातित्यहेतुत्वेऽपि तस्य प्रायश्चित्तमस्ति न वेति अस्ति चेत्तादृशप्रायश्चित्तेन परिपूतस्य समुद्रयायिसामान्यस्य संसर्गस्सामान्यतश्शास्त्रनिषिद्धो न वेति च चतुर्धा विप्रतिपत्तयस्सन्ति ।

तत्र प्रथमविप्रतिपत्तौ कलियुगे द्विजानां समुद्रयानं सामान्यतो धर्मशास्त्रनिषिद्धमिति सिद्धान्तः । तथा हि कलिवर्ज्यप्रकरणे पराशरमाधवीयस्मृतिसंग्रहयोः —द्विजस्याब्धौ तु निर्याणं शोधितस्यापि संग्रह इति । स्मृतिसंग्रहे समुद्रयानस्वीकारः कमण्डलुविधारणमिति । मदनपारिजाते समुद्रयात्रास्वीकारः कमण्डलुविधारणमित्याद्यनेकवचनैस्सामान्यतस्समुद्रयानस्यैव निषेधात् । न च हेमाद्रौ मासं कारागृहे वासो नौभिर्यात्रा दिनत्रयम् । म्लेच्छावास्तथा पक्षं यस्य स्यात्स तु पातकीति दिनत्रयान्न्यूनकालिकनौकायानवत एव पातकित्वप्रतिपादकम-

तेषु च मध्ये बोधायनोऽप्यन्युपक्रम्य । अथ पतनीयानि समुद्रयान ब्राह्मणन्यासापहरण भूम्यनृत सर्वपण्यैर्यवहरण शूद्रसेवन शूद्राभिगमन यश्च शूद्रायामभिजायते तदपत्यं च भवतीति बोधायनसूत्रलेखनेन बोधायनसूत्रोक्त समुद्रयानमतिपातकमिति स्फुटीकृतम् । किं च तत्रैव तत्तत्पापप्रायश्चित्तकथनावसरे पतनीयाना प्रायश्चित्तमाह बोधायन इत्युपक्रम्य समुद्रयानमित्यादिबोधायनसूत्रलेखनात् पतनीयशब्दोत्तरवृत्तिबहुवचनेन बोधायनसूत्रोक्ताना समुद्रयानादिना सर्वेषामपि पतनीयत्वमिति स्फुटीकृत वैद्यनाथदीक्षितै । बोधायनाचार्यैस्तु अथ पतनीयानीति प्रतिज्ञाय समुद्रयान ब्राह्मणन्यासापहरणमित्याद्युपन्यासात् समुद्रयानस्य पतनीयत्व कण्ठरवेणोक्तम् । न च महापातकानामेव पतनहेतुत्व तदतिरिक्तानामतिपातकादीना त्वभ्यासापेक्षयैव पतनहेतुत्व न सकृदनुष्ठानमात्रेणेत्युक्त प्रकृतसमुद्रयानस्यातिपातकमध्यपरिगणनेऽपि न सकृदनुष्ठानमात्रेण पतनहेतुत्वकिन्त्वभ्यासापेक्षयैव उक्तबोधायनसूत्रे पतनहेतुत्वरूपयोगार्थकपतनीयशब्दस्यैव प्रयोगात् इति वाच्यम् । मातृयोनिसबन्धागस्तेननास्तिकनिन्दितकर्माभ्यासिपतितात्याग्यपतितत्यागिन पतिता इति गौतमसूत्रे अतिपातकापेक्षया अत्यन्तन्यूनपितृष्वसृगमनरूपानुपातकवतामपि मातृपितृयोनिसबन्धाग इत्यनेन पतितत्वस्योक्तत्वात्ततोऽप्यन्तगुरुभूतातिपातकमध्ये वैद्यनाथपरिगणितस्य समुद्रयानस्य अभ्यासानपेक्षयैव पतनहेतुत्वम् । न च बोधायनसूत्रे पतनीयशब्दप्रयोगानुपपत्तिरिति शङ्क्य उदाहरिष्यमाणनीचाभिगमनमित्यादियाज्ञवल्क्यवचने अभ्यासानपेक्षया पतनहेतुष्वपि पतनीयशब्दप्रयोगात् । किं च नीचाभिगमन गर्भपातन भर्तृहिंसनम् । विशेषपतनीयानि स्त्रीणामेतान्यपि ध्रुवमिति याज्ञवल्क्यवचनव्याख्यानावसरे विज्ञानयोगिभि । अपिशब्दात्पुरुषस्य यानि पतननिमित्तानि महापातकातिपातकसमपातकानुपातकान्यभ्यस्तानि चोपपातकानि तान्यपि स्त्रीणा ध्रुव निश्चित पतनकारणानि भवन्तीति व्याख्यानात् । उपपातकस्यैवाभ्यासोपेक्षय पतनहेतुत्व तत पूर्वोपदिष्टाना गुरुतराणा अनुपातकसमपातकातिपातकमहापातकान सकृदनुष्ठानेनैव पतनहेतुत्वमित्याविष्कृतम् । अत समुद्रयानस्य अभ्यास विनैव पतनहेतुत्व सिद्धम् । यदि च महापातकानामेव पतनहेतुत्व इतरेषा तु यावताऽभ्यासेन तत्तुल्यत्व तावदभ्यस्तानामेवेति समुद्रयानस्य वैद्यनाथदीक्षितैरतिपातकमध्यपाठेऽपि स्मृतौ कुत्रापि अतिपातकत्वानुक्ते यदनुक्त तत्प्रकीर्णकमिति विष्णुवचनोक्तरीत्या प्रकीर्णकत्वमङ्गीकृत्य यथा दिवास्वापादीनामत्यल्पप्रायश्चित्तापनोद्यत्वेन न पतनहेतुत्व तथा समुद्रयानस्यापि प्रकीर्णकत्वादल्पप्रायश्चित्तापनोद्यत्वेन न पतनहेतुत्व सम्भवतीत्याग्रह तदापि वक्ष्यमाणरीत्या इदानीन्तनसमुद्रयानस्य कामकृतत्वद्विरावृत्तत्वाभ्या बोधायनसूत्रोक्तत्रैवार्षिकप्रायश्चित्तस्य चातुर्गुण्येन द्वादशवार्षिकत्वसम्पत्त्या महापातकतुल्यत्वसम्भवेन भवदुक्तरीत्याऽपीदानीन्तनसमुद्रयानस्य पतनहेतुत्व सिद्धमिति विधिकोटिरेव ज्यायसीत्यल पल्लवितेन ॥

कलिवर्ज्यप्रकरणपठितानां द्विजस्येत्यादिवचनानां नियमतः कलिवर्ज्यधर्मबोधनार्थमेव प्रवृत्ततया कल्यादिपदसमभिव्याहृतत्वेन च प्राबल्यस्यैव विनिगमकत्वात् । उक्तबोधायनसूत्रे आयुधीयकसमुद्रयानयोः कलिनिषिद्धयोरुपादानं कलियुगेतरयुगाभिप्रायकमेवेति कल्यविच्छिन्नद्विजकर्तृकसमुद्रयानसामान्यस्य शास्त्रनिषिद्धत्वं युक्तमेवेति ॥

अथ द्वितीयविप्रतिपत्तिनिषेधकोटिवादिनः उक्तरीत्या समुद्रयानस्य कलिनिषिद्धत्वेन प्रत्यवायहेतुत्वेऽपि न तस्य पतनहेतुत्वं सम्भवति पतनहेतुषु महापातकेषु तत्तुल्येषु च पातकेषु मनुयाज्ञवल्क्यपराशरादिभिः समुद्रयानस्यापरिगणितत्वात् । न च तस्य परिगणनाभावेऽपि स्मृतिनिषिद्धया चिरकालाभ्यासे तस्यैव पतनहेतुत्वं सम्भवति । गौतमसूत्रे मातृपितृयोनिसम्बन्धागस्तेननास्तिकनिन्दितकर्माभ्यासिपतितात्याग्यपतितत्यागिनः पतिताः पातकसंयोजकाश्चेत्यादिना निन्दितकर्माभ्यासिनामपि पतितत्वस्योक्तत्वादिति वाच्यम् । निन्दितकर्मणामभ्यासो नाम अनेकवारमनुष्ठानं तच्च द्विः शतकृत्वस्सहस्रकृत्वो वा भवति ।' तेषामविशेषेण पातित्यहेतुत्वाङ्गीकारे द्विवारानुष्ठितगोवधस्य शतवारानुष्ठितगोवधस्य सहस्रवारानुष्ठितगोवधस्य चाविशेषेण पातित्यापत्तिः सहस्रकृत्वोऽनुष्ठानेऽपि पातित्यासम्पादकदिवास्वापादिकर्तुः पातित्यापत्तिः द्विवारानुष्ठितदिवास्वापस्य सहस्रकृत्वोऽनुष्ठितगोवधस्य चाविशेषेण पातित्यापत्तिश्च । अतः यादृशे निन्दितकर्मणि अर्थवादे प्रत्यवायाधिक्यं श्रूयते यादृशे वा प्रायश्चित्ताधिक्यमभिहितं तादृशस्य निन्दितकर्मणः यावत्संख्याकानुष्ठानेन महापातकादितुल्यत्वं सम्पद्यते तस्य निन्दितकर्मणस्तावत्संख्याकानुष्ठानं पातित्यहेतुर्भवतीति वक्तव्यम् । एवं च त्रिवारानुष्ठितगोवधादेरेव महापातकतुल्यत्वं सम्भाव्यत इति तस्यैव पातित्यहेतुत्वम् । न ततो न्यूनसंख्याकस्य । ततोऽधिकसंख्याकानां तु यावत्संख्याधिक्यं तावत्पातित्यविशेषो वाच्यम् । दिवास्वापादेस्तु सहस्रकृत्वोऽनुष्ठानेऽपि प्रत्यहं क्रियमाणवेदाभ्यासादिनिवर्तनीयप्रत्यवायकतया महापातकतुल्यत्वासम्भवात् पातित्यापादकत्वं न सम्भवत्येवेति नानुपपत्तिः । यादृशस्य गोवधादिरूपनिन्दितकर्मणः त्रिवाराद्यनुष्ठाने महापातकतुल्यत्वं तादृशगोवधादिरूपनिन्दितकर्मणस्त्रिवाराद्यनुष्ठानमेव निन्दितकर्माभ्यासशब्दार्थः । त्रिवाराद्यनुष्ठितगोवधादिनिन्दितकर्मण एव निन्दितकर्माभ्यासिनः ते पतिता इत्युक्तगौतमसूत्रस्यार्थः । प्रकृते तु समुद्रयानविषये प्रत्यवायविशेषाश्रवणात्प्रायश्चित्तविशेषाविधानाच्च न तस्य पातित्यहेतुत्वमित्याहुः । तत्र । स्मृतिमुक्ताफले प्रायश्चित्तनिमित्तविभजनावसरे पुरुषस्य कामक्रोधलोभाख्यं रिपुत्रयं सुघोरं भवति तेनायमाक्रान्तो महापातकातिपातकसमपातकोपपातकेषु प्रवर्तते सङ्कलीकरणेषु मलिनीकरणेष्वपात्रीकरणेषु जातिभ्रंशकरेषु प्रकीर्णकेषु चेति विष्णुवचनोदाहरणपूर्वकं तादृशविष्णुवचनोक्तरीत्यैव प्रायश्चित्तनिमित्तानां महापातकातिपातकसमपातकोपपातकसङ्कलीकरणमलिनीकरणापात्रीकरणजातिभ्रंशकरप्रकीर्णकभेदान्नवधा विभागं प्रदर्श्य विभागक्रमेण महापातकनिरूपणानन्तरमतिपातकान्याह मनुरित्युपक्रम्यातिपातकप्रतिपादकानि मन्वादिस्मृतिवचनानि प्रतिपादितानि ।

तेषु च मध्ये बोधायनोऽपीत्युपक्रम्य । अथ पतनीयानि समुद्रयानं ब्राह्मणन्यासापहरणं भूम्यनृतं सर्वपण्यैर्व्यवहरणं शूद्रसेवनं शूद्राभिगमनं यश्च शूद्रायामभिजायते तदपत्यं च भवतीति बोधायनसूत्रलेखनेन बोधायनसूत्रोक्तं समुद्रयानमतिपातकमिति स्फुटीकृतम् । किं च तत्रैव तत्तत्पापप्रायश्चित्तकथनावसरे पतनीयानां प्रायश्चित्तमाह बोधायन इत्युपक्रम्य समुद्रयानमित्यादिबोधायनसूत्रलेखनात् पतनीयशब्दोत्तरप्रवृत्तिबहुवचनेन बोधायनसूत्रोक्तानां समुद्रयानादीनां सर्वेषामपि पतनीयत्वमिति स्फुटीकृतं वैद्यनाथदीक्षितैः । बोधायनाचार्यस्तु अथ पतनीयानीति प्रतिज्ञाय समुद्रयानं ब्राह्मणन्यासापहरणमित्याद्युपन्यासात्समुद्रयानस्य पतनीयत्वं कण्ठरवेणोक्तम् । न च महापातकानामेव पतनहेतुत्वं तदतिरिक्तानामतिपातकादीनां त्वभ्यासापेक्षयैव पतनहेतुत्वं न सकृदनुष्ठानमात्रेणेत्यत प्रकृतसमुद्रयानस्यातिपातकमध्यपरिगणनेऽपि न सकृदनुष्ठानमात्रेण पतनहेतुत्वंकिन्त्वभ्यासापेक्षयैव उक्तबोधायनसूत्रे पतनहेतुत्वरूपयोग्यार्थकपतनीयशब्दस्यैव प्रयोगात् इति वाच्यम् । मातृयोनिसम्बन्धागस्तेनवास्तिकनिन्दितकर्माभ्यासिपतितात्याग्यपतितत्यागिनः पतिता इति गौतमसूत्रे अतिपातकापेक्षया अत्यन्तन्यूनपितृष्वसृगमनरूपानुपातकवतामपि मातृपितृयोनिसम्बन्धाग इत्यनेन पतितत्वस्योक्तत्वात्ततोऽत्यन्तगुरुभूतातिपातकमध्ये वैद्यनाथपरिगणितस्य समुद्रयानस्य अभ्यासानपेक्षयैव पतनहेतुत्वम् । न च बोधायनसूत्रे पतनीयशब्दप्रयोगादनुपपत्तिरिति शङ्क्य उदाहरिष्यमाणनीचाभिगमनमित्यादियाज्ञवल्क्यवचने अभ्यासानपेक्षया पतनहेतुष्वपि पतनीयशब्दप्रयोगात् । किं च नीचाभिगमनं गर्भपातनं भर्तृहिंसनम् । विशेषपतनीयानि स्त्रीणामेतान्यपि ध्रुवमिति याज्ञवल्क्यवचनव्याख्यानावसरे विज्ञानयोगिभिः । अपिशब्दात्पुरुषस्य यानि पतननिमित्तानि महापातकातिपातकसमपातकानुपातकान्यभ्यस्तानि चोपपातकानि तान्यपि स्त्रीणां ध्रुवं निश्चितं पतनकारणानि भवन्तीति व्याख्यानात् । उपपातकस्यैवाभ्यासापेक्षया पतनहेतुत्वं ततः पूर्वोपदिष्टानां गुरुतराणां अनुपातकसमपातकातिपातकमहापातकानां सकृदनुष्ठानेनैव पतनहेतुत्वमित्याविष्कृतम् । अतः समुद्रयानस्य अभ्यासं विनैव पतनहेतुत्वं सिद्धम् । यदि च महापातकानामेव पतनहेतुत्वं इतरेषां तु यावताऽभ्यासेन तत्तुल्यत्वं तावदभ्यस्तानामेवेति समुद्रयानस्य वैद्यनाथदीक्षितैरतिपातकमध्यपाठेऽपि स्मृतौ क्वापि अतिपातकत्वानुक्तेः यदनुक्तं तत्प्रकीर्णकमिति विष्णुवचनोक्तरीत्या प्रकीर्णकत्वमङ्गीकृत्य यथा दिवास्वापादीनामत्यल्पप्रायश्चित्तापनोद्यत्वेन न पतनहेतुत्वं तथा समुद्रयानस्यापि प्रकीर्णकत्वादल्पप्रायश्चित्तापनोद्यत्वेन न पतनहेतुत्वं सम्भवतीत्याग्रहः तदापि वक्ष्यमाणरीत्या इदानीन्तनसमुद्रयानस्य कामकृतत्वाद्विरावृत्तत्वाभ्यां बोधायनसूत्रोक्तत्रैवार्षिकप्रायश्चित्तस्य चातुर्गुण्येन द्वादशवार्षिकत्वसम्पत्त्या महापातकतुल्यत्वसम्भवेन भवदुक्तरीत्याऽपीदानीन्तनसमुद्रयानस्य पतनहेतुत्वं सिद्धमिति विधिकोटिरेव ज्यायसीत्यलं पल्लवितेन ॥

अथ तृतीयविप्रतिपत्तिनिषेधको टिप्पादिनः—उक्तरीत्या समुद्रयानस्य पातित्यहेतुत्वेऽपि माधवविज्ञानयोगिप्रभृतिभिः धर्मशास्त्रनिबन्धनकर्तृभिः प्रायश्चित्तस्यानिर्णीततयानास्त्येव प्रायश्चित्तमित्याहुः। तन्न। कलौ द्वीपान्तरे द्विजानामभावेन अस्माद्द्वीपाद्द्वीपान्तरगमनस्य प्यकार्याणामभावात्समुद्रयानस्य विशेषतः प्रसक्त्यभावमभिप्रेत्य माधवादिभिः प्रायश्चित्तनिर्णयाकरणेऽपि वैद्यनाथदीक्षितैः प्रथमं प्रायश्चित्तनिमित्तविभजनावसरे अतिपातकेषु बोधायनोऽप्याह्युपक्रम्य समुद्रयानं ब्राह्मणन्यासापहरणमित्यादिबोधायनसूत्रलेखनेन समुद्रयानस्यातिपातकत्वं प्रदर्श्य प्रायश्चित्तनिरूपणावसरे, पतनीयानां प्रायश्चित्तमाह बोधायनः इत्युपक्रम्य समुद्रयानं ब्राह्मणन्यासापहरणं भूम्यनृतं सर्वपण्यैर्व्यवहरणं शूद्रसेवनं शूद्राभिगमनं यश्च शूद्रायामभिजायते तदपत्यं च भवति तेषां च निर्देशश्चतुर्थकालं मितभोजिनस्स्युरपोऽभ्युपेयुस्सवनानुकल्पं स्थानासनाभ्यां विहरन्त एते त्रिभिर्वर्षैस्तदपहरन्ति पापमिति बोधायनसूत्रमुदाहृत्य शूद्राभिगमनं इदं महत्प्रायश्चित्तं ऋतूपगमने अपत्योत्पत्तौ द्रष्टव्यं वृषलीफेनपीतस्य निश्वासोपहतस्य च। तस्यां चैव प्रसूतस्य निष्कृतिर्न विधीयते इति स्मृतेरिति लेखनेन उक्तबोधायनसूत्रगतशूद्राभिगमनमित्यस्यैव शूद्रायामपत्योत्पत्त्याधायकऋतूपगमनरूपविषयविशेषपरिकल्पनेन इतरेषां समुद्रयानमित्यादीनां यथाश्रुतार्थपरतया समुद्रयानादिषु तु असङ्कोचेनैव त्रैवार्षिकप्रायश्चित्तं विधेयमित्यभिप्रायः स्फुटीकृतः। न च तादृशग्रन्थस्य शूद्राभिगमनमात्रे प्रायश्चित्तनिर्णायकत्वमिति वाच्यम्। उपक्रमे पतनीयानामिति बहुवचनविरोधापत्तेः। तस्मात्समुद्रयाने बोधायनोक्तत्रैवार्षिकप्रायश्चित्तमेव विधेयमिति वैद्यनाथाभिप्राय इति सिद्धम्। तादृशं च प्रायश्चित्तं अकामकृतसमुद्रयाने कामकृतसमुद्रयाने तु ऋग्विधाने सकृत्समुद्रयाने तु प्रायश्चित्तमुदाहृतम्। बहुकालादभ्यसने प्रायश्चित्तं तु नैव हि। कलौ द्विजोऽब्धौ याने तु प्रायश्चित्तेन शुध्यति। वर्षत्रयं व्रतं कृत्वा सहस्रं च हिरण्ययम्। ब्राह्मणेभ्यः प्रदद्याच्च शक्त्या गोदानमेव चेत्यादिना आश्वलायनोक्तगोदानसहस्रहिरण्यदानसहितत्रैवार्षिकव्रतं वा वक्ष्यमाणमन्वङ्गिरोव्याघ्रवचनोक्तरीत्या बोधायनोक्तत्रैवार्षिकव्रतं द्विगुणीकृत्य षड्वार्षिकव्रतं वा प्रायश्चित्तं विधेयम्। परन्तु इदानीन्तना ये केचित् हूणभाषाया नैपुण्यमभिलषन्तः अस्मिन्द्वीपे तज्ज्ञातारो यावत्पाठयन्ति तावद्दृष्ट्वा ततोऽप्यधिकतरनैपुण्यप्रेप्सया समुद्रमार्गेण द्वीपान्तरं गत्वा तत्र कानिचिद्दिनान्युषित्वा तत्रत्यतज्ज्ञातृभ्यस्सकाशान्नैपुण्यमपाद्य ततस्समुद्रमार्गेणैतद्द्वीपं पुनरागच्छन्ति तैः कृतसमुद्रयानस्य कामकृतत्वाद्द्विरावृत्तत्वाच्च कामकृते द्विगुणं द्विरावृत्तौ द्विगुणमिति तादृशसमुद्रयाने बोधायनोक्तत्रैवार्षिकं चतुर्गुणितं वा ऋग्विधानोक्तं द्विगुणीकृतं वा प्रायश्चित्ततया विधेयम्। अथ उक्तबोधायनसूत्रं कामकृतत्वाकामकृतत्वभेदाविवक्षया सामान्यतस्समुद्रयाने निमित्तीकृत्य त्रैवार्षिकप्रायश्चित्तविधानात्सकामकृतेऽपि समुद्रयाने बोधायनोक्तत्रैवार्षिकमेव प्रायश्चित्तं ऋग्विधानोक्तप्रायश्चित्तेन विकल्प्यते। न च बोधायनीयतादृशप्रायश्चित्तविधानस्य

अकामकृतसमुद्रयानविषयत्वमेवेति वक्तव्यम् । कामकृतसमुद्रयानविषयकत्वस्याप्यङ्गीकारे विहितं यदकामाना कामात्तद्द्विगुणं भवेदिति यन्मनुवचनं यच्च अकामतः कृते पापे प्रायश्चित्तं न कामतः । स्यादकामकृते यत्तद्द्विगुणं बुद्धिपूर्वके इत्यङ्गिरोवचनम् । यदपि देशं कालं वयश्शक्तिं ज्ञानं बुद्धिकृतं तथा । अबुद्धिकृतमभ्यासं ज्ञात्वा विष्कमणं वदेदिति व्याघ्रवचनमित्यादीनि पापसामान्ये अकामकृतप्रायश्चित्तापेक्षया कामकृते द्विगुणप्रायश्चित्तविधायकानि विरुध्येरन्निति वाच्यम् । अकामकृततत्तत्पापप्रायश्चित्तापेक्षया कामकृतत्वमनूद्य तत्तत्पापेषु द्विगुणितातिरिक्तप्रायश्चित्तविधायकवचनाविरोधमपत्तये तद्बलान्निरुक्तमन्वङ्गिरोव्याघ्रवचनानां तत्तत्पापातिरिक्तपापविषयकत्वस्येव कामकृतसमुद्रयाने गुरुतरप्रायश्चित्तविधायकनिरुक्तऋग्विधानगतवचनबलादपि समुद्रयानातिरिक्तपापविषयकत्वस्याप्यवश्याङ्गीकार्यत्वेन विरोधस्य परिहरणीयतया कामकृतेऽपि समुद्रयाने वैकल्पिकं बोधायनोक्तत्रैवार्षिकमेव प्रायश्चित्तमिति चेन्न । सर्वष्वपि पापेषु साधारण्येन अकामकृतापेक्षया कामकृते द्विगुणप्रायश्चित्तविधायकानां निरुक्तमन्वङ्गिरोव्याघ्रवचनानां पापविशेषे अकामकृतापेक्षया कामकृते अन्यादृशस्य अकामकृतप्रायश्चित्तद्विगुणितातिरिक्तस्य गुरुप्रायश्चित्तविशेषस्य विधायकानामपि वचनानां परस्परं विरोध एव न प्रसज्यते तयोः प्रायश्चित्तयोः कामकृततादृशपापविशेषे वैकल्पिकत्वाभ्युपगमात् । येन तत्परिहाराय निरुक्तमन्वङ्गिरोव्याघ्रवचनानां सङ्कोचपरिकल्पनम् स्यात् । न ह्येकस्मिन्पापे एकविधमेव प्रायश्चित्तमिति नियमः । एतदेव व्रतं कुर्युरुपपातकिनो द्विजाः । अवकीर्णी च शुद्ध्यर्थं चान्द्रायणमथापि चेति मनुवचनेन उपपातकशुद्धिस्स्यादेव चान्द्रायणेन वा पयसा वापि मासेन पराकेणाथवा पुनरिति याज्ञवल्क्यवचनेन चैकविधेऽपि पापे अनेकविधानां प्रायश्चित्तानां विकल्पेन विधानात् । परन्तु निरुक्तबोधायनसूत्रनिरुक्तऋग्विधानगतवचनयोश्च सामान्यविशेषभावाद्विरोधः प्रसज्यते । स च तयोः कामकृतसमुद्रयाने वैकल्पिकत्वमङ्गीकृत्य न परिहर्तुं शक्यते तत्प्रतिपाद्ययोः केवलत्रैवार्षिकव्रतहिरण्यदानादिसहितत्रैवार्षिकव्रतयोर्लघुगुरुप्रायश्चित्तयोर्मध्ये लघुनैव पापनिवृत्तिरूपफलसिद्धौ गुरुप्रायश्चित्तविधानस्य निरर्थकतापत्त्या तयोर्वैकल्पिकत्वासंभवात् । किन्तु कामकृतत्वमनूद्य गुरुतरप्रायश्चित्तविधायकऋग्विधानगतवचनार्थान्यथानुपपत्त्या लघुतरप्रायश्चित्तविधायकबोधायनसूत्रस्य अकामकृतसमुद्रयानविषयकत्वमङ्गीकृत्य विरोधः परिहरणीयः । तथा च निरुक्तऋग्विधानगतवचनबलान्निरुक्तबोधायनसूत्रस्याकामकृतसमुद्रयानविषयकत्वे सिद्धे पूर्वोक्तमन्वङ्गिरोव्याघ्रवचनबलात्कामकृतसमुद्रयाने अकामकृतसमुद्रयानविषयकनिरुक्तबोधायनसूत्रोक्तत्रैवार्षिकं द्विगुणीकृत्य षड्वार्षिकव्रतं वा निरुक्तऋग्विधानोक्तगोदानसहस्रहिरण्यदानसहितत्रैवार्षिकव्रतं वा विकल्पेन प्रायश्चित्ततया विधेयमिति सिद्धम् । ततश्च द्विरावृत्ते कामकृतसमुद्रयाने निरुक्तकामकृतसमुद्रयानप्रायश्चित्तं द्विगुणीकृत्यैव विधेयम् । ननु द्विरावृत्तेऽपि कामकृतसमुद्रयाने पूर्वोक्तकामकृतसमुद्रयानप्रायश्चित्तस्य सकृदनुष्ठानेनैव पापक्षयलक्षणकार्यनिष्पत्तेः द्विवारानुष्ठानमनावश्यकम् ।

तथा हि जैमिनीये मीमांसाध्यायप्रथमपादे सप्तमाधिकरणीयसंशयपूर्वपक्षसिद्धान्तानुवादिनी-य कारिका-अङ्गेऽभ्यासो न वा भूम्नाऽभ्यासो नाङ्गे पृथक्फलम्। अङ्गयावृत्त्यैव भूमात प्रयोगेऽङ्ग सकृद्भवेदिति। अस्या अर्थ। एकस्मिन्प्रयोगे प्रयाजाद्यङ्गमावर्तनीयं न वेति संशय। यथा भूय फलार्थिना कारीर्यादिकं काम्यकर्मफलानुसारेणावर्त्यते तथा प्रयाजाद्य-ङ्गमपि फलभूमार्थिना आवर्तनीयमिति पूर्व पक्ष। सिद्धान्तस्तु सकृदनुष्ठितप्रयाजाद्यङ्गो-पकृतप्रधानादर्थफलं ततोऽतिरिक्तस्य कस्यचित्फलस्याभावात् प्रयाजाद्यावृत्तेरनावश्यक-त्वात् तादृशस्य च फलस्य सकृदनुष्ठानेनापि सिद्धे। न चाङ्गावृत्तिप्रयोजनमुपकारभूय स्त्वन्तच फलभूयस्त्वे पर्यवस्यति यथा सस्यादिषु कर्षणाद्यावृत्तिर्भूय उपकारद्वारा फलं वर्धयति तद्वद्भूय उपकारद्वारा फलवृद्ध्यर्थं प्रयाजाद्यङ्गावृत्तिरावश्यकेति वाच्यम्। सस्या-दिषु भूय उपकारो दृष्ट इति तदर्थं कर्षणाद्यावृत्तियुक्ता प्रधानयागोपकारस्तु शास्त्रादेव ज्ञेय। न च शास्त्रमुपकारभूयस्त्वायाङ्गावृत्तिं क्वचिद्ब्रूते। तस्मान्छास्त्रसमधिगम्यप्र-धानयागोपकारस्य सकृत्प्रयाजाद्यङ्गानुष्ठानेनापि सिद्धेरेकस्मिन्प्रयोगे सकृदेव प्रयाजाद्यङ्-गानुष्ठानमिति। किं च तत्रैव दशमाधिकरणीयसंशयपूर्वपक्षसिद्धान्तानुवादि कारिकाद्वय-प्रयत्न्नग्निकार्याण्यङ्गानि तन्त्रेणोताङ्गिनो यत। एकैकस्योपकार्यत्व तस्मात्प्रत्यङ्गमनुष्ठिति॥ विधानवदनुष्ठान सकृत्तदेवोपकारकम्। तद्देशकालकर्तॄणामैक्यमतंकारादिवदिति। अस्या अर्थ दर्शपूर्णमासयोस्त्रीणि त्रीण्याग्नेयादिप्रधानानि विहितानि अङ्गानि च प्रयाजादीनि। तत्र प्रयाजाद्यङ्गानि प्रतिप्रधानं पृथगनुष्ठेयान्युत सकृदनुष्ठेयानीति संशय। आग्नेयादिषु त्रिष्वेकैकसाध्याङ्गोपकारापेक्षित्वात्प्रतिप्रधानमङ्गानि पृथगनुष्ठेयानीति पूर्व पक्ष। सि-द्धान्तस्तु यथा समिधो यजतीत्यादि विधान सकृदेव प्रवृत्त न त्वाग्नेयादिभेदेन पृथ-क्प्रवर्तते तथा अनुष्ठानमपि सकृदेव प्रवर्तते। प्रवृत्त च सत् त्रयाणामप्युपकाराकाङ्क्षा पूरयति। यथा बहूना पुरतस्सकृत्प्रवृत्तं नर्तकीनर्तनं देशकालकर्त्रैक्यात्सर्वेषामपि युगपन्मुदं जनयति तद्वत्। तस्मादाग्नेयादिप्रधानभेदेऽपि देशकालकर्तॄणामैक्यात् प्रया-जाद्यङ्गानि सकृदेवानुष्ठेयानीति। एवमधिकरणद्वयोक्तरीत्या प्रकृते पापक्षयलक्षणकार्यस्य वैलक्षण्याभावाद्देशकालकर्तृणामैक्याच्च सकृदनुष्ठितेनाङ्गेन प्रधानयागोपकारलक्षणकार्यस्येव सकृदनुष्ठितेन निरुक्तग्रामकृतसमुद्रयानप्रायश्चित्तेन द्विरावृत्तग्रामकृतसमुद्रयानप्रयोज्यपाप-क्षयलक्षणकार्यस्य सम्भवात् द्विरावृत्तेऽपि ग्रामकृतसमुद्रयाने पूर्वोक्तग्रामकृतसमुद्रयानप्रा-यश्चित्तस्य सकृदनुष्ठानमेव न तु द्विरनुष्ठानमिति चेन्न। पूर्वोदाहृतेन सकृत्समुद्रयाने तु प्रायश्चित्तमुदाहृतम्। बहुशस्तत्यरूपमने प्रायश्चित्त तु नैव हीति स्मृतिविधानगताश्वलायन-वचनेन पूर्वोत्तराधाभ्यां वक्ष्यमाणस्त्रौ द्विजोऽभियान सिन्ध्वादिनौदाहृतप्रायश्चित्तस्य सकृत्समुद्रयानविषयत्व अनेकवारावर्तितसमुद्रयाने तादृशप्रायश्चित्ताभाव च प्रतिपादयता द्विरावर्तितसमुद्रयानप्रयोज्यपापस्य तादृशप्रायश्चित्तानिवर्त्यत्वप्रतीत्या तत्पापस्य वि लक्षणत्वेन तत्क्षयलक्षणकार्यस्य निरुक्तप्रायश्चित्तानिवर्त्यपापक्षयापेक्षया वैल क्षण्य निरुक्त-

श्वलायनवचनसिद्धम् । प्रधानयागोपकारस्य वैलक्षण्यं तु न श्रुतिसिद्धम् । अतस्तत्र कार्यसिद्ध्यर्थमङ्गानां सकृदनुष्ठानं युक्तम् । प्रकृते तु तादृशपापक्षयलक्षणकार्यवैलक्षण्यस्य वचनसिद्धत्वात्तादृशविलक्षणकार्यसिद्ध्यर्थं द्विगुणिततादृशप्रायश्चित्तानुष्ठानमेव युक्तम् । किं च जैमिनीयषष्ठाध्यायद्वितीयपादाष्टमाधिकरणन्यायेनाप्येतत्सङ्गतम् । तथा हि तत्र संशयपूर्वपक्षसिद्धान्ताभिधायिनीयं कारिका— सकृत्स्यादावृत्तिर्दर्शादेर्शास्त्रसाध्यत । सकृत्स्यात्कालमयुक्जीवनावृत्तितोऽन्तिम इति । अस्या अर्थ दर्शपूर्णमासादीनामनुष्ठानं सकृदसकृद्वेति संशयः सकृदनुष्ठानेनैव विधिशास्त्रस्य चरितार्थत्वात्सकृदेवानुष्ठानमिति पूर्वपक्षः । दर्शादिकालरूपनिमित्तविशिष्टजीवनस्यावृत्तौ नैमित्तिकस्याप्यावर्तनीयत्वात्प्रतिनिमित्तं नैमित्तिकमनुष्ठेयमिति सिद्धान्तः । प्रकृते प्रायश्चित्तानां नैमित्तिकत्वेऽपि चरितव्यमतो नित्यं प्रायश्चित्तं विशुद्धये । निन्द्यैर्हि लक्षणैर्युक्ता जायन्ते निष्कृतैनस इति मनुवचनेन प्रायश्चित्तमकुर्वाणा पापेषु निरता जना । अपश्चात्तापिनः कष्टान्नरकान् यान्ति दारुणानिति याज्ञवल्क्यवचनेन च अकरणे प्रत्यवायप्रतिपादनात् । अवश्यकर्तव्यत्वरूपनित्यत्वप्रतीत्या दर्शपूर्णमासयागवत् प्रायश्चित्तानामपि निमित्तभूतपापावृत्त्यनुसारेणावर्तनं युक्तम् । इत्थं चेदानीन्तनपुरुषकर्तृकस्वामकृतद्विरावृत्तसमुद्रयाने बौधायनसूत्रोक्तत्रैवार्षिकव्रतं चतुर्गुणीकृत्य द्वादशवार्षिकव्रतं निरुक्तऋग्विधानोक्तप्रायश्चित्तं द्विगुणीकृत्य गोदानद्वयद्विसहस्रहिरण्यदानसहितषड्वार्षिकव्रतं वा प्रायश्चित्ततया विधेयमिति सिद्धम् । एतेन द्विरावृत्तमपीदानीन्तनपुरुषकर्तृकसमुद्रयानं सकृत्कृतमिति मत्वा तत्पापनिरासार्थं तत्कन्त्रा ऋग्विधानोक्तसुवर्णदानादिसहितत्रैवार्षिकव्रतमेव कारयित्वा तत्कर्ता शुद्धोऽभूदिति वदन्तो निरस्ताः । तत्कारिततादृशप्रायश्चित्तेन द्विरावृत्ततादृशसमुद्रयानपापस्य निवृत्त्यसम्भवात् । एवं च विवक्षितविवेकेन समुद्रयाने तत्तत्प्रायश्चित्तानि शास्त्रीयाणि सन्त्येवेति विधिकोटिरेव ज्यायसीत्यलं प्रसक्तानुप्रसक्त्या ।

अथ चतुर्थविप्रतिपत्तिनिषेधकोटिवादिनः कृतप्रायश्चित्तसमुद्रयायिसामान्यस्य संसर्गस्सामान्यतश्शास्त्रनिषिद्धो न भवति परंतु शास्त्रसम्मत एव तथा हि एनस्विभिरनिर्णिक्तैर्नार्थं किंचित्समाचरेत् । कृतनिर्णेजनांश्चैव न जुगुप्सेत कर्हिचिदिति मनुवचनेन कृतप्रायश्चित्तपापिसंसर्गनिन्दानिषेधपूर्वकमकृतप्रायश्चित्तपापिसंसर्गमात्रस्य निषेधविषयकेन कृतप्रायश्चित्तपापिसंसर्गकर्तव्यतायास्सूचितत्वात् तादृशमनुवचनतात्पर्यनिर्णायककुल्लूकभट्टव्याख्यया पापकारिभिरकृतप्रायश्चित्तैस्सह दानप्रतिग्रहादिकमर्थं किंचिन्नानुतिष्ठेत् कृतप्रायश्चित्तांश्चैव कदाचिदपि पूर्वकृतपापत्वेन निन्देत् किन्तु पूर्ववद्व्यवहरेदित्यनेन कृतप्रायश्चित्तपापिनां सव्यवहार्यत्वस्य स्फुटं प्रतिपादनाच्च । न च द्विजस्याब्धौ तु नौयातुश्शोधितस्यापि संग्रहः इति वृद्धपराशरवचनेन समुद्रयानरूपपापविशेषविषयकृतप्रायश्चित्तस्यापि तादृशपापिनः असंग्राह्यत्वप्रतिपादकेन विरोधात् । निरुक्तमनुवचस्य समुद्रयानरूपपापातिरिक्तपापविषयत्वस्याङ्गीकरणीयतया कृतप्रायश्चित्तसमुद्रयायिसंसर्गस्य स्मृतिनिषिद्धत्वेन न शास्त्रसम्मतत्वमिति वाच्यम् । श्राद्धवर्ज्यब्राह्मणनिरूपणावसरे माधवीयवचनाचार्योदाहृतम् अ-

गारदाही गरद कुण्डाशी सोमविक्रयी। समुद्रयायी बन्दी च तैलक कूटकारक इति यन्मनुवचन यच्च समुद्रयायी वान्ताशी केशविक्रयिणश्च ये। अवकीर्णी च वीरघ्नी गुरुघ्न पितृघातक इति यमवचनम् ताभ्या समुयायिनश्श्राद्धवर्ज्यत्वप्रतिपादन निरुक्तद्विजस्येत्यादिवचनस्य सामान्यतस्समुद्रयायिससर्गनिषेधपरत्वे नोपपद्यते। अप्रसक्तस्य प्रतिषेधानर्हत्वात्। अत निरुक्तद्विजस्येत्यादिवचनगतसम्प्रहपदस्य श्राद्धनिमन्त्रणीयत्वरूपससर्गविशेषपरत्वमङ्गीकृत्य नैष्ठिकाना वनस्थाना यतीना चावकीर्णिनाम्। शुद्धानामपि लोकेऽस्मिन्नत्याशत्तिर्न विद्यत इति माधवाचार्योदाहृतकौशिकवचनसमानार्थकत्वमुपपादनीय तथा च समुद्रयायिसामान्यप्रतियोगिकश्राद्धनिमन्त्रणीयत्वरूपससर्गविशेषस्य वा अवकीर्णिनैष्ठिकादिरूपसमुद्रयायिविशेषप्रतियोगिकससर्गसामान्यस्य वा उक्तद्विजस्येत्यादिवचनेन निषेधाच्च समुद्रयायिसामान्यसमर्गस्सामान्यतश्शास्त्रनिषिद्ध इति तदितरसमुद्रयायिससर्गं कर्तव्यत्वेन निरुक्तमनुवचनसम्मत एव। किं च धर्मशास्त्रविहितानि सर्वाण्यपि प्रायश्चित्तानि सफलानीति वक्तव्यम्। अन्यथा तेषु पापिना प्रवृत्त्यनुपपत्ते। प्रायश्चित्तफल च पापनिवृत्तिः इह लोके सव्यवहारश्च तयोर्मध्ये पापनिवृत्तेरामुष्मिकत्वेन शास्त्रैकसमधिगम्यमानतया अदृष्टत्वात् तदपेक्षया सव्यवहारस्य ऐहिकफलत्वेन दृष्टतया तस्यैव पुरुषप्रवृत्तिजनकेच्छाविषयत्वसम्भवात् मुख्यफलत्वमिति प्रायश्चित्तविधानस्य तदर्थकत्वेन प्रकृते प्रायश्चित्तविधायकवचनबलादपि समुद्रयायिससर्गस्य कर्तव्यत्व सूचितम्। अपि च। अनेकस्मृतिवचनविरोधपरिहाराय वक्ष्यमाणरीत्यनुसरणेनापि समुद्रयायिसमर्गस्य कर्तव्यत्व सूच्यते। तथा हि पराशरस्मृतौ चतुर्थाध्याये ससर्गमाचरेद्विप्र पतितादिष्वकामत इत्यादिना पतितससर्गे कालतारतम्येनाष्टौ पक्षान् प्रदर्श्य त्रिरात्र प्रथमे पक्ष इत्यादिना क्रमेण तत्तत्प्रायश्चित्तान्यभिहितानि। समुद्रयायिससर्गस्य पतितससर्गत्वे हि तस्योक्तप्रायश्चित्तनिवर्त्यत्व स्यात् समुद्रयायिन उपपातकितया महापातकित्वाभावेन पतितत्वाभावात् तत्ससर्गस्य पतितससर्गत्वमेव न सभवतीति निरुक्तपराशरस्मृतौ पतितससर्गस्यैव प्रायश्चित्त कथनेन उपपातकिससर्गस्य दोषावहत्वाभावस्सूचित। अयमेवार्थो माधवाचार्यैस्तद्वचनव्याख्याया एकशय्यासन पङ्क्तिभाण्ड पक्त्यन्नमिश्रणम्। नवभ सङ्कर प्रोक्तो न कर्तव्योऽधर्मस्सहेति बृहस्पतिवचनोदाहरणपूर्वक समर्गस्य नवविधत्व प्रदर्श्य एतादृशसकरात्पापात्पाति पूर्वस्मिन्युगे अत्र तु ससर्गश्चात्र याजनादिर्भोष इति लेखनेन याजनाध्यापनयौनससर्गव्यतिरिक्तससर्गस्य पतितप्रतियोगिकस्यैव दोषत्वामीव प्रतिपाद्यद्भिस्समुज्जृम्भितेन पतितससर्गविशेषस्यैव दोषावहत्व नास्ति किमु वक्तव्यमुपपातकिमुद्रयायिससर्गस्य दोषावहत्व नास्तीत्यत्रेति कैमुतिकन्यायेन घण्टाघोष प्रापितश्च। किं च आसनाच्छयनाद्यानात्सम्भाषात्सहभोजनात्। सङ्क्रामन्ति हि पापानि तैलबिन्दुरिवाम्भसीति द्वादशाध्यायान्तरिथतवचनव्याख्यानावसरे आचार्यस्तु कलौ युगे तादृशससर्गस्य दोषाभावमभिप्रेत्य ससर्गप्रायश्चित्त नाभ्यधात्। अत एव स्मृत्यन्तरे कलौ वर्ज्यानामनुक्रमणे ससर्गदोष पापिष्विति

पठितं तादृशसंसर्गस्य पातित्यापादकत्वाभावेऽपि पापमात्रापादकत्वमस्तीत्याहुः । आसंनीदित्यवतरणादनुवादितोऽपि तस्मादुक्तपराशरस्मृत्या निरुक्तद्विजस्यत्यादिवचनस्य विरोध कलिवर्ज्यप्रकरणपठितेन ससर्गदोषस्तेनाद्यैरित्यनेनापि विरोधश्च । एव कलिवर्ज्यप्रकरणपठितस्य महापातकनिष्कृतिरित्यस्य चतुर्विद्योपपन्नस्तु विधिवद्ब्रह्मघातके । समुद्रसेतुगमन प्रायश्चित्त विनिर्दिशेदिति ब्रह्महत्याप्रायश्चित्तविधायकपराशरस्मृतिविरोध । कलिवर्ज्यप्रकरणपठितस्यापद्वृत्तिर्द्विजेन्द्राणामित्यस्य देशभङ्गे प्रवासे वेत्यादिना आपद्वृत्तिप्रतिपादकपराशरस्मृति विरोधश्च । तादृशानेकस्मृतिविरोधपरिहारार्थेत्थ व्यवहारमयूखे अनशननिरूपणे नारदवचनगतापयातितपदव्याख्यानावसरे उदाहृतशङ्खलिखितवचनगतापयातितपदार्थो द्वयकरिक्थपिण्डोदकदाननिवृत्तिप्रयोजकतया प्रतिपाद्यमानयो राजद्रोहादिप्रयोज्यबन्धुकृतबहिष्कारविषयत्वव्यवसायप्रयोजनकसमुद्राधिकरणकगमनशीलत्वयोर्द्वयोरपि प्रयोजक कामतस्त्रिवाराधिकतयाऽनुष्ठित दुष्कर्मैव भवेत् तादृशस्यैव विधे प्राथमिकादस्माद्द्वितीये द्विगुण स्मृतम् । तृतीये त्रिगुण प्रोक्त चतुर्थे नास्ति निष्कृतिरित्यादिना प्रायश्चित्ताभावप्रतिपादनात् । प्रायश्चित्तानिवर्त्यतादृशदुष्कर्मण एव असंव्यवहार्यत्वप्रयोजकत्व पूर्वोदाहृतनिन्दितकर्माभ्यासिन पतिता इति गौतमसूत्रेण प्रतिपादितम् । तादृशगुरुतरदुष्कर्मण एव रिक्थपिण्डोदकदाननिवृत्तिप्रयोजकत्व सम्भवतीति उक्तशङ्खलिखितवचनगतापयातितशब्दार्थत्वमपि कामतस्त्रिवाराधिकतयाऽनुष्ठीयमानसमुद्रयानवत व्यवसायार्थ नावादिना समुद्रमध्ये द्वीपान्तरगन्तेत्यस्य गमूलगतात्रिअतस्माद्वातोस्ताच्छील्यार्थकतृन्प्रत्ययान्तगन्तृशब्देन विवक्षित विवक्षित च निरुक्तद्विजस्याब्धौ तु नौयातुरित्यत्रापि याप्रापण इत्येतस्माद्धातोस्ताच्छील्यार्थकतृन्प्रत्ययान्तनौयातृशब्देनेति उक्तद्विजस्येत्यादिवचनेन कामतस्त्रिवाराधिकतयाऽनुष्ठीयमानसमुद्रयानवत्पुरुषसंसर्गनिषेधस्यैव प्रतीयमानतया न तस्य वचनस्य निरुक्तसंसर्गमाचरेद्विप्र इत्यादिस्मृतिविरोध । संसर्गदोषस्तेनाद्यैरित्यत्र स्तेनाद्यपदस्य उपपातकिपरतया उपपातकिसंसर्गस्य अदोषत्वप्रतिपादनान्न तेनोक्तद्विजस्येत्यादेर्विरोध । महापातकनिष्कृतिरित्यस्य प्राणान्तिकप्रायश्चित्तनिषेधपरतया नोक्तसेतुदर्शनादिब्रह्महत्याप्रायश्चित्तविधायकपराशरस्मृतिविरोध । आपद्वृत्तिर्द्विजेन्द्राणामित्यस्यापि चाक्रायणादिकृपिद्धनम्लेच्छपाचितकुल्माषादिभक्षणादिरूपापद्वृत्तिनिषेधपरतया न देशभङ्गे प्रवासे चेत्याद्यापद्धर्मविधायकपराशरस्मृतिविरोध इति । तथा चोक्तद्विजस्येत्यादिस्मृत्या कामतस्त्रिवाराधिकतयाऽनुष्ठीयमानसमुद्रयानवत्पुरुषसंसर्गस्यैव निषिद्धतया अकामत कामतो वा सकृदनुष्ठितसमुद्रयानवत्पुरुषसंसर्गस्योक्तपराशरस्मृतिमाधवाचार्यकृततद्व्याख्याभ्या कर्तव्यत्व शास्त्रसम्मतमिति सिद्धमित्याहु । तत्र । कलिवर्ज्यप्रकरणेषु माधवीयस्मृतिसंग्रहयो द्विजस्याब्धौ तु निर्याणं शोधितस्यापि संग्रह इति । हेमाद्र्यादित्यपुराणे वृद्धपराशरस्मृतावपि द्विजस्याब्धौ तु नौयातुरशोधितस्यापि संग्रह इति । बृहन्नारदीये समुद्रयातुस्स्वीकार कमण्डलुविधारणमित्युदाहृतैर्वचनैस्सामान्यतस्समुद्रयायिसंसर्गस्य निषिद्धत्वात् । न चैनस्त्रिभि-

म्। न च नैष्ठिकानां वनस्थानां यतीनां चावकीर्णिनाम्। शुद्धानामपि लोकेऽस्मिन्प्रत्यासत्तिर्न विद्यत इति माधवाचार्योदाहृतकौशिकवचनेन उक्तद्विजन्येत्यादिवचननिचयस्य समानार्थकत्व शक्यते वक्तुं पूर्वोक्तदूषणगणप्रसारात्। निरुक्तवचनोपात्तयोरवकीर्णित्वसमुद्रयानयोरसव्यवहार्यत्वनिमित्तयोर्भेदात् तयोः प्रत्येकमेव निमित्तत्वात् विभिन्नयोरपि सम्भूयनिमित्तत्वाङ्गीकारे बालघ्नाश्च कृतघ्नाश्च विशुद्धानपि धर्मतः। शरणागतहन्तृंश्च स्त्रीहन्तृंश्च न संवसेदिति मनुवचनोपात्तबालव्यापादनकृतोपकारनाशनशरणागतव्यापादनस्त्रीव्यापादनादीनामनेकेषां सम्भूयनिमित्तत्वाङ्गीकारसम्भवेन तादृशानेकदुष्कर्मवत एव असव्यवहार्यतापत्त्या तादृशैकदुष्कर्मवता सव्यवहार्यत्वापत्तेः। एवं च पृथगुपात्तानामप्यनेकजातानां दुष्कर्मणामेकनिमित्तत्वाङ्गीकारे निमित्तिनोऽप्येकत्वापत्त्या नैवार्पिताादिस्वैकप्रायश्चित्तविधानसम्भवेन तत्तन्निमित्तभेदेन पृथक्पृथगनेकविधप्रायश्चित्तविधानवैफल्यापत्तेश्चेति निरुक्तद्विजस्येत्यादिवचनानां सङ्कोचकाभावादसङ्कोचेन स्वार्थप्रतिपादकतया सामान्यतस्समुद्रयायिससर्गश्शास्त्रनिषिद्ध एव। यत्तु प्रायश्चित्तस्य सव्यवहारमुख्यफलकतया तद्विधानादेव समुद्रयायिसंसर्गस्य कर्तव्यत्वं सूचितमिति तन्न सम्भवति। तथा हि। चरितव्यमतो नित्यं प्रायश्चित्तं विशुद्धये। निन्द्यैर्हि लक्षणैर्युक्ता जायन्तेऽनिष्कृतैनस इति मनुवचने विशुद्धय इत्यनेन शिष्टस्याभिचारप्रतिषिद्धसेवनमिति तत्र प्रायश्चित्तं कुर्यान्न कुर्यादिति मीमांसन्ते न कुर्यादित्याहुर्न हि कर्म क्षीयत इति कुर्यादित्यपरे पुनस्स्तोमेनेष्ट्वा पुनस्सवनमायातीति विज्ञायते व्रात्यस्तोमेनेष्ट्वा तरति सर्वं पाप्मानं तरति ब्रह्महत्यां योऽश्वमेधेन यजत इति गौतमधर्मे पूर्वोत्तरपक्षभङ्ग्या आपस्तम्बीयश्रौतसूत्रे प्रायश्चित्तानि प्रकम्य दोषनिर्घातार्थानि भवन्तीत्यनेन आपस्तम्बीयधर्मसूत्रे च दोषवच्च कर्माभिसन्धिपूर्वकं कृत्वाऽनभिसन्धिपूर्वं वाब्लिङ्गाभिरप उपस्पृशेद्वारुणीभिर्वेत्यनेन च पापनिवृत्तेरेव प्रायश्चित्तफलत्वाभिधानात् तस्या एव मुख्यफलत्वम्। न च तस्मात्तेनेह कर्तव्यं प्रायश्चित्तं विशुद्धये। एवमस्यान्तरात्मा च लोकश्चैव प्रसीदतीति याज्ञवल्क्यवचने पापनिवृत्तिसव्यवहारयोरुभयोरपि प्रायश्चित्तफलत्वेन प्रतिपादनादुभयोरपि मुख्यफलत्वमिति शङ्क्यम्। निरुक्तयाज्ञवल्क्यवचने पापनिवृत्तेर्मुख्यफलत्वाभिप्रायेणैव प्रथमतो विशुद्धय इति पापनिवृत्तिफलमुक्त्वा तदनन्तरमेव लोकप्रसादोऽभिहित। किं च पापनिवृत्तिः प्रायश्चित्तेनैव सम्पादनीया नेतरेण। सव्यवहारस्तु पापानुष्ठानेन वा पापसत्त्वे तद्गोपनेन वा सम्पादयितुं शक्यते। अतः प्रायश्चित्तस्य पापनिवृत्तिरेव मुख्यं फलम्। सव्यवहारस्तु गौणम्। यत्र मुख्यगौणयोरुभयोरपि बाधाभावः तत्रोभयमपि फलम्। यत्रैकस्य वचनान्तरेण बाधः तत्र तदन्यदेव फलम्। यथा प्रकृतसमुद्रयाननिमित्तकप्रायश्चित्ते अनुष्ठितेऽपि द्विजस्याब्धौ तु नौयातुश्शोधितस्यापि सङ्ग्रह इत्यनेन सव्यवहारस्य निषिद्धत्वात्पापनिवृत्तिमात्रफलकत्वं तादृशप्रायश्चित्तस्येति समुद्रयाने प्रायश्चित्तसत्त्वेऽपि समुद्रयायिसंसर्गश्शास्त्रनिषिद्ध एवेति। यत्तु अपि चेत्यादिना पतितसंसर्गप्रायश्चित्तप्रतिपादकपराशरस्मृत्यादिविरोधप्रदर्शनं तदु-

न भवत इति तद्ग्रन्थतात्पर्यमवसेयम् । उत्तरत्रासनाच्छयनादिति मूलवचनावतरणिकाया-मेव पङ्क्ति । यस्तु पतितैर्ब्रह्महादिभिस्सह संवत्सरं यानादिसंसर्ग कृत्वा स्वयमेव पतति तस्य प्रायश्चित्तं मनुराह यो येन पतितेनैषां संसर्गं याति मानव । स तस्यैव व्रतं कुर्या-त्तत्संसर्गविशुद्धय इति ॥ आचार्यस्तु कलौ युगे तादृशसंसर्गस्य दोषाभावमभिप्रेत्य संसर्गे प्रायश्चित्तं नाभ्यधात् । अत एव स्मृत्यन्तरे कलौ वर्ज्यानामनुक्रमणे संसर्गदोष पापेष्विति पठित तादृशसंसर्गदोषस्य पातित्यापादकत्वाभावेऽपि पापमात्रापादकत्वमस्तीत्याहेति । तस्यायमर्थ ब्रह्महत्यादिमहापातकिना यद्विहित प्रायश्चित्त तत्संसर्गिणोऽपि तदेव प्रायश्चि-त्तमिति मन्वाद्यभिप्राय । पराशरस्य तु पतितसंसर्गस्य कलौ पातित्यापादकत्वाभावेन न महापातकप्रायश्चित्त संपूर्ण किन्तु संवत्सरन्यूनपतितसंसर्गस्य कालतारतम्यानुसारेण पूर्वोक्त निराशे प्रथमे पक्ष इत्यादिना विहितम् । वत्सराधिकपतितसंसर्गस्य तु तत्सम इत्यनेनाति-देशिक तत्प्रतियोगिमहापातकप्रायश्चित्त पादोन न तु सम्पूर्णमित्यभिप्राय । एतदभिप्रायेणैव पराशराचार्येण ब्रह्महत्यादिमहापातकप्रायश्चित्तकथनावसरे तत्संसर्गप्रायश्चित्त नोक्तमित्यर्थ । एतेन यो वै समाचरेद्विप्र इत्यादिस्मृतिव्याख्याया पूर्वोत्तरग्रन्थयोर्विरोध तद्व्याख्याया आसनाच्छयनादित्यादिस्मृतिव्याख्यायाश्च विरोध इति शङ्का अपास्ता । तथा च नोक्तप-राशरस्मृत्या निरुक्तद्विजस्येत्यादिवचनस्य विरोध । पर त्विदानीन्तनसमुदायिसंसर्गस्य पूर्वोपदर्शितद्वितीयविप्रतिपत्तिसिद्धान्तार्थपर्यालोचनया पतितसंसर्गत्वेन तद्विषये निराशे प्रथमे पक्ष इत्यादिना प्रायश्चित्तविधानस्यानिरुक्तपराशरस्मृतेर्निरुक्तद्विजस्येत्यादिवचन-निचयप्रतिपाद्यमाननिषेधानुवादित्वमेवेति । संसर्गदोषस्तेनाद्यैरित्यस्य स्तेनाद्यैर्महापातकि-भिश्चतुर्भिस्संसर्गस्य दोषस्संसर्गदोष । दोष पतनहेतुत्व तथा च स्तेनादिमहापातकिसंस-र्गस्य कलौ पतनहेतुत्व नास्तीत्यर्थ । अथवा दोष पतनहेतु तथा च सविशेषणे हि वि-धिनिषेधौ विशेष्ये बाधे विशेषणमुपसंक्रामत इति न्यायेन कलौ महापातकिसंसर्गे पतनहे-तुत्व नास्तीत्यर्थ । एव च कलौ महापातकानि चत्वार्येव तादृशमहापातकिसंसर्गस्तु पापा-धायकोऽपि न महापातकमिति भाव । तथा च बौधायनीये सुमन्तु ब्रह्महत्या सुरापान स्तेय गुर्वङ्गनागम । महापातकसंज्ञानि चत्वार्येव कलौ युगे इत्यनुक्त संगच्छते । कलि-वर्ज्यप्रकरणे संसर्गदोष स्तेनाद्यैरित्यपि पाठ तथैव माधवाचार्यैश्चनाथीयेनोदाहरणात् तथा पाठे पापेषु महापातकेषु दोष पतनहेतुमहापातकम् । तथा च पञ्चमहापातकघटक संसर्ग-रूपमहापातक कलौ नास्तीत्यर्थ । न च कलिवर्ज्यप्रकरणपठितयोरुभयोर्वचनयोरेकार्थ-कत्वे एकवचनेनैवार्थबोधसंभवे अन्यस्य नैरर्थक्य शङ्कनीयम् । उभयोरपि विभिन्नकर्तृक-त्वात् समानकर्तृकयोर्ह्यानर्थक्यदोष न हि कलिवर्ज्यप्रकरणस्थानि सर्वाण्यपि वचनान्येक-कर्तृकाणि भवन्ति विभिन्नकर्तृकाणामेव वचनाना मध्ये स्वोदाहृतैकवचनार्थसंप्रतिपत्तये तदितरेषा समानार्थकवचनानामेकत्र प्रबन्धकारैरुदाहरणात् तथैव सर्वत्र ग्रन्थेषूपलभ्यमानत्वात् । तस्माद्येन येन पुरुषेण यद्यद्वचन प्रथमतो गृहीत तत्तद्वचन तस्य तस्यापूर्व जनयतीति

नानर्थक्यदोष । इय च रीति स्मृतिष्वनेकशो दृश्यते महापातकनिष्कृतिरित्यस्य कामकृतमहापातकाना यन्मरणान्तिक प्रायश्चित्त विहित तद्ब्राह्मणाना कलौ वर्ज्यमित्यर्थ । तथा च वैद्यनाथीये ब्रह्महत्याप्रायश्चित्तनिरूपणावसरे एतच्च मरणान्तिकप्रायश्चित्त ब्राह्मणानां कलौ निषिद्ध प्रायश्चित्तविधानं च विप्राणा मरणान्तिकम्। भृग्वग्निपतनैश्चैव वृद्धादिमरण तथेति कलियुगनिषिद्धधर्ममध्ये परिगणनादित्यन्तमुक्त सङ्गच्छते । आपद्वृत्तिद्विजाग्र्याणामित्यस्य द्विजा ब्राह्मणक्षत्रियवैश्या तेष्वग्र्या ब्राह्मणास्तेषामापदि विहिता या वृत्ति हिंसाप्रायक्षत्रियादिवृत्ति सा कलौ वर्जनीयेत्यर्थ । तथा च वैद्यनाथीये ब्राह्मणानामापद्वृत्तिनिरूपणावसरे असभवे त्वापदि क्षत्रियादिवृत्ति । इय च क्षत्रियादिवृत्तिहिंसाप्राया वर्जनीया आततायिद्विजाग्र्याणा धर्मयुद्धेन हिंसनम् । आपद्वृत्तिर्द्विजाग्र्याणामश्वस्तनिकता तथेति कलौ निषिद्धत्वात् । क्षत्रवृत्त्या वैश्यवृत्ति प्रशस्ता स्यात्कलौ युग इत्याश्वलायनस्मरणाच्चेत्युक्त सगच्छते । एव च न कोऽपि विरोधशङ्कापदमारोहति । यच्च व्यवहारमयूख इत्यादिना निरुक्तद्विजस्येत्यादिवचननिचयस्य कामतस्त्रिवाराधिकत्याऽनुष्ठीयमानसमुद्रयानवत्पुरुषविशेषससर्गनिषेधार्थकत्वपरिकल्पन यच्च तदुपष्टम्भकतया मयूखग्रन्थनयन तत्सम्यक्तद्ग्रन्थानवलोकनमूलकमेव । तथा हि । व्यवहारमयूखे अनशानिरूपणे पितृद्विट्पतितषण्डो यश्च स्यादपपात्रित । औरसा अपि नैतेऽश लभेरन् क्षेत्रजा कुत इति नारदवचनगतापपात्रितपदव्याख्यानावसरे एव पङ्क्ति –अपपात्रित: राजद्रोहाद्यपराधेन बन्धुभिर्घटस्फोटादिना बहिष्कृत इति मदन ।व्यवसायार्थं नावादिना समुद्रमार्गेण द्वीपान्तरगन्तेति युक्तम्। द्विजस्याब्धौ तु नौयातुश्शोधितस्यापि सग्रह इति तत्रैव कलौ निषेधात् । राजद्रोहादौ घटस्फोटनहिष्कारयोरविधानाच्च । तथा च शङ्खलिखितौ अपपात्रिते रिक्थपिण्डोदकानि व्यावर्तन्त इतीति । तस्या अर्थ निरुक्तनारदवचनगतापपात्रितपदस्य मदनोक्तरीत्या राजद्रोहाद्यपराधनिमित्तकबन्धुकर्तृकघटस्फोटादिपूर्वकबहिष्कारार्थकत्व न सम्भवति राजद्रोहाद्यपराध निमित्तीकृत्य घटस्फोटबहिष्कारयोरविधानात् । याज्ञवल्क्येन दासीकुम्भ बहिर्ग्रामान्निनयेरन् स्वबान्धवा । पतितस्य बहि कुर्युस्सर्वकार्येषु चैव तमित्यादिना पतितस्यैव घटस्फोटबहिष्कारयोर्विधानात्। राजद्रोहाद्यपराधवति रिक्थपिण्डोदकदाननिषेधाभावाच्च । अतो व्यवसायोद्देश्यकनौकाकरणकसमुद्राधिकरणकगमनानुकूलकृत्याश्रयार्थकत्वमेव वक्तव्य तत्ससर्गस्यैव निरुक्तद्विजस्येत्यादिवचनेन कलौ निषिद्धत्वात् । न च तदुद्देश्यकद्रव्यादिदानस्य कथं तत्ससर्गत्वमिति शङ्क्यम्। आसनाच्छयनाद्यानात्सभापात्सहभोजनादिति माधवाचार्योदाहृतकण्ववचनेन तदुद्देश्यकद्रव्यादिदानस्यापि तत्ससर्गत्वेनोक्तत्वात् तस्मान्निरुक्तसमुदायाद्युद्देश्यकद्रव्यादिदानस्यापि निरुक्तद्विजस्येत्यादिवचनेन निषिद्धत्वात् । अपपात्रितपदार्थत्व समुद्रयायिनो युक्तम् । एव च सति निरुक्तशङ्खलिखितवचनप्रतिपादकपिण्डोदकदाननिवृत्त्युद्देश्यत्वमपि तस्य सगच्छत इत्यर्थ । निषेधादिति अविधानादिति च पञ्चम्यन्तद्वय स्वोक्तार्थसभवमदनोक्तार्थासभवयोर्हेतुतया।

अन्वीयते। न तु स्वोक्तार्थस्य स्मृत्यन्तरानुगृहीतत्वप्रदर्शनार्थम्। उदाहरिष्यमाणशङ्खलिखितवचनप्रतिपादितापशाग्नितोद्दिस्यक्रिक्थपिण्डोदकदाननिवृत्तिप्रयोजकतया येन तदवलम्बेन निरुक्तद्विजस्येत्यादिवचनस्य कामतस्त्रिवाराधिक्यतयाऽनुष्ठीयमानसमुद्रयानवत्पुरुषविशेषसंसर्गनिषेधार्थकत्वमुच्येत। न च निरुक्तवचनगततातृशब्दस्य ताच्छील्यार्थतृन्प्रत्ययान्तत्वविवक्षया तद्वचनस्य तादृशार्थकत्वं कल्प्यत इति शङ्क्यम्। समुद्रयानप्रायश्चित्तविधायकबौधायनसूत्रे तन्निषेधविधायकेषु समुद्रयानात्स्वीकार इत्यादिवचनेषु तत्पुरुषसंसर्गनिषेधविधायकेषु द्विजस्याब्धौ तु निर्याण शोधितस्यापि संग्रह इत्यादिवचनेषु च पूर्वोदाहृतेषु सामान्यतस्समुद्रयानस्यैवोपात्ततया तदनुसारेण या प्रापण इत्येतस्माद्धातोर्ण्वुल्तृचाविति सूत्रेण तृच्प्रत्ययस्यैवाङ्गीकरणीयतया तादृशविवक्षाया कल्पयितुमशक्यत्वात्। अथ कृते तु मानवा धर्मास्त्रेतायां गौतमा स्मृता। द्वापरे शाङ्खलिखिता कलौ पाराशरा स्मृता इत्यनेन कलियुगे पराशरस्मृतेरेव मुख्यत्वं प्रतीयते तत्र च समुद्र*यानं न निषिद्धं न वा तस्य तत्र प्रायश्चित्तमभिहितम्* अतो न समुद्रयायिसंसर्गं कलौ निषिद्ध इति चेन्न। युगे युगे तु सामर्थ्यं शेषं मुनिविभाषितमित्यनेन इतरमुन्युक्तनिषेधानामपि पराशरस्मृतौ संगृहीतत्वात्। कलौ पाराशरा स्मृता इत्यनेन पराशरोक्तानां सर्वेषामपि कलिधर्मत्वमिति प्रतीत्या अविशेषेणवृद्धपराशरस्मृत्यन्तर्गतनिरुक्तद्विजस्येत्यादिवचनप्रतिपादितसमुद्रयायिसंसर्गनिषेधस्यापि कलिधर्मत्वाच्च। न चैतत्पराशरोक्तानामेव कलिधर्मत्वमिति वक्तुं शक्यं विशेषाभावात्। यदि वृद्धपराशरोक्तानां कलिधर्मत्वं न स्वीक्रियते तर्हि पराशरेण चाप्युक्तं प्रायश्चित्तं विधीयत इत्यनेन प्रतिज्ञावचनेन वृद्धपराशरोक्तानामेवैतत्पराशरोक्तत्वप्रतीते एतत्पराशरोक्तानामपि कलिधर्मत्वं न स्यात्। अत उभयथापि समुद्रयायिसंसर्गनिषेधस्य कलिधर्मत्वं सुस्थिरमेव। अथ कृते सम्भाषणादेव त्रेतायां स्पर्शनेन च। द्वापरे त्वन्नमादाय कलौ पतति कर्मणेति पराशरवचने सम्भाषणादेवेत्येवकारस्यानुषङ्गेण कलौ पतति कर्मणेत्यत्र कलौ दुष्कर्मण पातित्यहेतुत्वं न तु तद्दुष्पुरुषसंसर्गस्येत्यर्थस्य प्रतीयमानतया तादृशपराशरवचनेन निरुक्तद्विजस्येत्यादेर्विरोध इति चेद्भ्रान्तोऽसि। कलौ पतति कर्मणेत्यस्य भवदुक्तार्थकत्वे त्यजेद्देशं कृतयुगे त्रेतायां ग्राममेव च। द्वापरे कुलमेकं तु कर्तारं तु कलौ युगे॥ इति पूर्वतनवचने तुकारस्यैवकारार्थकतया कलौ कर्तारं त्यजेत् न तु कर्तृसम्बन्धिदेशग्रामकुलानीत्यर्थकेन कर्तारं तु कलौ युगे इत्यनेन विरोधापत्ते। न च कर्तारं त्वित्यादे कर्तारं त्यजेत् न तत्संसर्गिणमित्यर्थकत्वकल्पनया उभयोरपि समानार्थकत्वं सम्भवतीति वाच्यम्। कर्तारं त्वित्यत्र एवकारार्थकतुकारव्यवच्छेद्यत्वं कर्तृसंसर्गिणां न सम्भवति पूर्वमप्रसक्तत्वात् अपि तु कर्तृसम्बन्धिदेशग्रामकुलानामेव तेषामेव पूर्वं त्यजेत् देशमित्यादिना प्रसक्तत्वात्। तथा च कलौ पतति कर्मणेत्यत्रापि अनुषज्यमानपूर्ववाक्यगतैवकारव्यवच्छेद्यत्वं पतितप्रतियोगिकसम्भाषणतत्स्पर्शनादीनामेव तेषामेव पूर्वतने कृते सम्भाषणा-

देवेत्यादि वाक्यत्रये प्रसक्तत्वात् । एवं च कर्मणेत्यस्यापि पतितप्रतियोगिकयाजनाध्यापनादिससर्गविशेषेणेत्यर्थस्त्वाङ्गीकारावश्यकतया कलौ पतति कर्मणेत्यत्र कलौ पतितप्रतियोगिकयाजनाध्यापनादिना पतति न पतितप्रतियोगिकसभाषणादिनेत्यर्थस्यैव प्रतीयमानत्वात् तेन वचनेन पूर्वतनवचनविरोधः । एतदभिप्रायेणैव माधवाचार्याणां कर्तारं तु कलौ युग इत्येतद्वचनव्याख्यानावसरे कर्तृत्याग सभाषणादिवर्जनमित्यादि लेखन उत्तरत्र पतिततत्ससर्गप्रायश्चित्तविधायकवचनव्याख्यानावसरे याजनादौ तु सद्य पततीत्यादि लेखन आसनाच्छयनादित्यादिमूलावतरणिकायाम् आचार्यस्तु कलौ युगे इत्यारभ्य तादृशसंसर्गदोषस्य पातित्यापादकत्वाभावेऽपि पापमात्राधायकत्वमस्तीत्याहेत्यन्तलेखन च सगच्छते । तथा च निरुक्तपराशरवचनविरोधाभावादुक्तद्विजस्येत्यादिवचनजातमसकोचेनैव स्वार्थ बोधयतीति कलौ सकृत्कृतासकृत्कृतकामकृताऽकामकृतभेदेनानेकविधसमुद्रयानवता कृतप्रायश्चित्ताकृतप्रायश्चित्तभेदेन द्विधानामपि द्विजाना ससर्गस्सामान्यतो धर्मशास्त्रनिषिद्ध इत्यल बहुना ।

यथोक्तरीत्या समुद्रयायिससर्गस्य शास्त्रनिषिद्धत्वे तादृशसमुद्रयायिससर्गेष्वनेकविधेषु प्रत्येक विधेयानि प्रायश्चित्तानि कीदृशानीति चेदुच्यते । तादृशानेकविधससर्गाणा मध्ये याजनाध्यापनयौनैकपात्रभोजनरूपोत्तमससर्गाणामन्यतमे कामकृते यो येन सपिबेद्द्विज सोऽपि तत्तुल्यतामियात् । पादन्यून चरेत्सोऽपि तस्य तस्य व्रत द्विज इति व्यासवचनोक्तरीत्याससर्गप्रतियोगिविहितप्रायश्चित्त चतुर्थांशहीन विधेयम् । यथा कामतस्सकृदनुष्ठितसमुद्रयानवत तृतीयविप्रतिसिद्धान्तोक्तरीत्या षड्वार्षिकव्रत प्रायश्चित्त विहितम् । तदेव चतुर्थांशहीन सत् सार्धचतुर्वार्षिकव्रत कामकृते तत्ससर्गे विधेयम् । अकामकृते तु पतितसप्रयोगे तु ब्राह्मेण स्रौवेण वा यौनेन वा यास्तेभ्यस्सकाशान्मात्रा उपलब्धास्तासा परित्यागस्तैश्च न सवसेदुदीचा दिश गत्वाऽनश्नन् सहितामधीयान पूतो भवतीति वसिष्ठोक्त विधेयम् । सहयानासनशय्यैकपङ्क्तिभोजनरूपमध्यमससर्गाणामकामकृताना वत्सरद्वयव्याप्तिं विना मिलितानामेव पातित्यापादकत्वेन *मिलिततादृशससर्गचतुष्के यो वै समाचरेद्विप्र* इत्यादिपराशरस्मृत्या वत्सरपर्यन्तमष्टौ पक्षान् प्रदर्श्य वत्सरानन्तर तदूर्ध्वमित्यमेन वत्सरद्वयव्यापिनवमपक्षमपि प्रदर्श्य त्रिरात्र प्रथमे पक्ष इत्यादिना वत्सरान्त कालतारतम्यानुसारेण विहितानि यानि प्रायश्चित्तानि यच्च नवमपक्षे तत्सम इत्यनेन ससर्गप्रतियोगितुल्यत्वप्रतिपादनात् । पूर्वोपदर्शितव्यासवचनेनाभिधीयमान ससर्गप्रतियोगिप्रायश्चित्त पादोनव्रतम् । तानि ससर्गकालतारतम्यानुसारेण विधेयानि कामकृते तु तादृशससर्गचतुष्के

पञ्चाहे तु चरेत्कृच्छ्र दशाहे तप्तकृच्छ्रकम् । पराकस्त्वर्धमासे स्यान्मासे चान्द्रायण चरेत् ॥
मासत्रये प्रकुर्वीत कृच्छ्र चान्द्रायणोत्तरम् । पाण्मासिके तु ससर्गे कृच्छ्र त्वब्दार्धमाचरेत् ।
ससर्गे त्वाब्दिके कुर्यादब्द चान्द्रायण नर इति स्मृत्यन्तरोक्तानि कालतारतम्यानुसारेण विधेयानि । आब्दिके ससर्गे त्रिभिर्न्यूने चान्द्रायण पूर्णे तु ससर्गप्रतियोगिप्रायश्चित्त पादोन

विधेयम् । एकैकस्मिन् मध्यमसंसर्गे तु देश काल वयश्शक्ति ज्ञान बुद्धिकृत तथा । अबुद्धिकृतमभ्यास ज्ञात्वा निष्क्रमणं वदेदिति यद्व्यासवचनं यच्च देश काल वयश्शक्ति पाप चावेक्ष्य यत्नत । प्रायश्चित्तं प्रकल्प्यं स्याद्यत्र चोक्ता न निष्कृतिरिति याज्ञवल्क्यवचनं तादृशवचनद्वयोक्तरीत्या पापकालतारतम्याद्यनुसारेण परिकल्प्य प्रायश्चित्तानि विधेयानि । सम्भाषणाद्यधमसंसर्गाणामन्यतमे दर्शने ज्योतिषां दर्शनं स्पर्शने हृदयालम्भनं सम्भाषणे ब्राह्मणसम्भाषणं पुनरुपस्पर्शनं चेत्यौशनसवचनोक्तानि विधेयानि । तदितराधमसंसर्गेषु तु प्रायश्चित्तमयूखव्यवस्थापितानि । तत्राप्यनुक्तप्रायश्चित्तविशेषेषु संसर्गेषु पूर्वोक्तव्यासयाज्ञवल्क्यवचनोक्तरीतिमनुसृत्य प्रायश्चित्तानि विधेयानीत्येतत्सर्वं साक्षात्पापिसंसर्गिष्वेव संसर्गिसंसर्गिषु तु यो येन संपिबेदित्यादि पूर्वोपदर्शितव्यासवचनोक्तरीत्या तत्तत्संसर्गप्रतियोगिप्रायश्चित्तं चतुर्थांशहीनं विधेयम् । एवं तत्संसर्गिषु तत्संसर्गिसंसर्गिष्वपि विधेयम् । तथा च साक्षात्पापिसंसर्गिणमारभ्य संसर्गिपरम्परायां चतुर्थपर्यन्तं विधेयम् । पञ्चमस्य न किमपीति मयूखादिषु व्यवस्थापितम् । अत्र चतुर्थसंसर्गिपर्यन्तं प्रायश्चित्तोक्तिः पापिप्रतियोगिकोत्तमसंसर्गाभिप्रायेणैव मध्यमाधमसंसर्गेषु यस्य यस्य यावद्यावत्प्रायश्चित्ताधिक्यं तावद्द्वितीयतृतीयसंसर्गिपर्यन्तगामित्वं तत्तत्संसर्गदोषस्येति द्रष्टव्यम् । ननु अकृतप्रायश्चित्तसमुद्रयायिसंसर्गिणां प्रायश्चित्तमस्तु कृतप्रायश्चित्तसमुद्रयायिसंसर्गिणां कथं प्रायश्चित्तित्वं तेषां पापाभावात् । न च पापिसंसर्गात्प्रतियोगिनिष्ठपापं संक्रमत इति वाच्यम् । पापकालावच्छिन्नपापिसंसर्गस्यैव अनुयोगिनि प्रतियोगिनिष्ठपापसंक्रामकत्वेन तादृशसमुद्रयायिनिष्ठपापस्य प्रायश्चित्तेन नष्टत्वात्तन्नाशोत्तरकालिकतदुपलक्षितपुरुषसंसर्गस्य तत्संक्रामकत्वासम्भवादिति चेन्न । तादृशसमुद्रयायिसंसर्गात्पूर्वतनप्रतियोगिनिष्ठपापसंक्रमासम्भवेऽपि नैष्ठिकानां वनस्थानां यतीनामित्यादिकौशिकवचननिषिद्धस्य कृतप्रायश्चित्तावकीर्णियत्यादिसंसर्गस्यैव कृतप्रायश्चित्तसमुद्रयायिसंसर्गस्य द्विजस्येत्यादिवचननिचयनिषिद्धत्वात्तादृशस्मृतिनिषिद्धानुष्ठानेन न सुरां पिबेदित्यादिनिषिद्धसुरापानाद्यनुष्ठानेनेव अपूर्वपापस्योत्पत्तेः । तन्निवृत्त्यर्थं प्रायश्चित्तानुष्ठानस्यावश्यकतया कृतप्रायश्चित्तसमुद्रयायिसंसर्गिष्वपि प्रायश्चित्तविधानं युक्तमेव । परं त्वत्र तृतीयविप्रतिपत्तौ समुद्रयायिषु कामकृतत्वाकामकृतत्वसकृत्कृतत्वासकृत्कृतत्वभेदेन षैवार्षिकादिप्रायश्चित्तप्रतिपादनम् । चतुर्थविप्रतिपत्तौ तत्तत्संसर्गिणि चतुर्थांशहीनं तत्तत्प्रायश्चित्तप्रतिपादनं च ये द्विजानेव कर्णधारान् विधाय तैरेव नीयमानां नावमारुह्य महता द्विजपरिवारेण समुद्रमार्गेण गच्छन्तस्त्रिसन्ध्यं तत्र तत्र तीरे अवरुह्य नैत्यकं कर्म निर्वर्तयन्तो जिगमिषितदेशं प्राप्य तत्र हूणराजधान्यां अन्तिमवर्णभूयिष्ठत्वात् तामपहाय अन्यत्र निकेतनं कृत्वा तदीयकूपजलादिकमपिबन्तस्स्वकृतसमुद्रयानरूपैकदुरितनिवृत्तिमुद्दिश्य तत्रैव प्रायश्चित्तं चिकीर्षन्ति ये चोक्तप्रकारेणैव समुद्रमार्गेण गत्वा तत्र कञ्चित्कालमुषित्वा ततः पुनस्तन्मार्गेणोक्तप्रकारेणैव स्वदेशमागत्य स्वेनानुष्ठितदुरितनिवृत्तिमुद्दिश्य प्रायश्चित्तं चिकीर्षन्ति तद्विषयमेव । ये पुनश्चण्डालैरेव नीयमानां नावमारुह्य तैस्सहैवाभ्य-

